मंदाग्नित्वं प्रतिश्यायं पांडुतां विषमज्वरम् ।
नान्नाभिलाषं कासं च हन्यात्तु मधुनार्द्रकम् ॥
मन्याहनुश्रवणलोचननासिकास्य
भ्रूभागतालुगलशंखशिरोविकारान् ।
कृष्णा निहंति दशमूलकषायपीता
क्वाथोथ वा सहकृतत्रिफलोद्भवश्च ॥

मानमाह—

गुंजाभिः सप्तभिर्माषः शाणो माषचतुष्टयम् ।
शाणौ द्वौ वटकः कोलस्तौ द्वौ कर्ष उदुंबरः ॥
अक्षं पाणितलं ज्ञेयं सुवर्णं कवलग्रहः ।
पिचुर्बिडालपदकं शुक्तिः पाणितलद्वयम् ॥
तद्द्वयेन पलं मुष्टिः प्रकुंचो बिल्व उच्यते ।
द्वे पले प्रसृतिं विद्यात्तद्द्वयं कुडवोंजलिः ॥
माणिकाष्टपलं ते द्वे प्रस्थमस्य चतुर्गुणम् ।
आढकं कंसपात्रे तु चतुर्भिद्रोण उच्यते ॥
तत्पर्यायघटो मानं नल्वणार्मणशूर्पकाः ।
तुला पलशतं ताभिर्विंशत्या भार उच्यते ॥
शुष्कद्रव्येष्विदं मानं द्विगुणं च द्रवार्द्रयोः ।
ज्ञातव्यं कुडवादूर्ध्वं प्रस्थादिष्वपि मानतः ॥
द्विगुणेन तुलामानादिति मानविदो विदुः ॥
द्रोणीद्रोणाढकाः प्रस्थं कुडवश्च पलं पिचुः ।
शाणको माषकश्चैव यथापूर्वं चतुर्गुणम् ॥
सम्यक्प्रयोगात्सर्वेषां सिद्धिमाख्याति कर्मणाम् ॥

सिद्धिमाख्याति सर्वेषां गुणैर्युक्तो भिषग्वरः ॥

इति मिश्रकाध्यायः ॥

यः श्रेष्ठस्तरणिप्रभावजनितो वंशः समालोक्यते
रामाद्याः पृथिवीश्वराः समभवन्यत्र प्रभावोन्नताः ।
नो वा यत्र युधिष्ठिरप्रभृतयो भूपा अभूवंस्ततः
सृष्टस्तोमरवंश एष विधिना सत्कर्मसंसेविना ॥

तत्राभवत्कमलसिंह इति प्रसिद्धः
सर्वागमाचरणसेवितदेवसिद्धः ।
तस्मादभूत्सुगतिभूपतिदेववर्मा
विद्याविनोदमतिरापूतपुण्यकर्मा ॥

श्रीदेववर्मात्मज एष धीरः स्वशास्त्रसंतापितशत्रुवीरः ।
श्रीवीरसिंहः क्षितिपालसिंहः शास्त्रत्रयाद्ग्रंथमिमंव्यधत्त ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेव-
विरचिते ज्योतिश्शास्त्रकर्मविपाकायुर्वेदोक्तप्र-
योगे वीरसिंहावलोकः ॥

---

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर"
मुद्रणालय—मुंबई.

